॥ बृहत्साम ॥ ५ ॥

ऊ० ३प्र० १अ० पूर्द० २ऋचि, आ० १प्र० १अ० २०साम ।

१ २र ३ १ २र ३ १ २
त्वा मिद्धि हवामहे सातौ वाजस्य कारवः ।
२ ३ १ २ ३ १ २ ३ १ २ २ २र ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ५

२र २ २ २ २ १ २र २
औँहोई त्वामिद्धि हवामहाइए । सातौ वाजा ।
२ १ ५ १ २ ५र ४र ४ २ १
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । वृत्रा
१ २ २ २ ४ १ २र
इष्ववाई । द्रासा३१त् । पतिं ना२३४राः । त्वाँ
२ २ ४र ४र ५ ५ ५
काष्ठा३४ । औहोवा । स्व२ र्वा२३४ । तोः । उहु-
५ १
वाह्हाउ । वा । इस् ॥ ५ ॥

"इतिति हहत् प्राप सुदजयत्"—इति प्रा० ७ । ६ ॥
"प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं मनसा ध्यायत् तस्य यन्मनस्यासीत्तद् बृहत् समभवत् स, आद्धीत गर्भो वै मेऽय मन्तर्हितस्तं वाचा प्रजनयाइति"—इति च प्रा० ७ । ६ ॥ ५ ॥

## ॥ रथन्तरम् ॥ ६ ॥

छ० ३प्र० १अ० ५द० १ऋचि, आ० २प्र० १अ० २१साम ।

२ १ २ १ २ ३ १ २
अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।
१ २ २ २ २र ३ २ ३ १ २ ३ १ २
ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः ॥ ६

२ऽ र र र १ ऽ १ २र र
आभित्वा शूरनोनुमो वा । आदुग्धा इव धेनव
र र १ २ १
ईशान मस्य जगतः । सुवा २३ र्दृ शाम् । आइ
र २ १ ४ २ र र ५
शानमा २३ इन्द्रा ३ । तास्थु २३४ षा । ओं वा ६ ।
५ १
हाउवा । अस् ॥ ६ ॥

"अहिति रथन्तर मपान मभिसमवेटस्त"—इति ब्रा० ७।६।
"स वाचं व्यसृजत सा वापयन्तर मन्वपद्यत रथम्मर्याः
क्षेप्तातरोऽदिति तद्रथन्तरस्य रथन्तरत्वम्"—
इति च ब्रा० ७।६।६।

---

"प्राणापानौ वै बृहद्रथन्तरे ज्योगामयाविन उभे कुर्यादप-
क्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावे-
वास्मिन् दधाति"—इति च ब्राह्मणान्तरम् ७।६।५,६॥

---

## ॥ महावामदेव्यसाम ॥ ७ ॥

उ० १प्र० १ग्र० १२सू० १—३ ऋचः, ऊ० १प्र० १ग्र० ५साम ।

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु ॥ अभी षु णः सखीनामविता जरितॄणाम् । शतम्भवास्यूतये ॥७

काऽ५या । नश्चा३इत्रा३आभुवात् । ऊ । तो सदावृ धः स । खा । औ३हो हाइ । कया २३ शचाइ । ष्ठयौ हो ३ । हुम्मा २ । वाऽ२र्त्तो ३ऽ५ हाइ ॥ काऽ५स्त्वा । सत्यो ३ मा३ दानम् । मा । हिष्ठो मा त्सादन्ध । सा । औ ३ हो हाइ । दृढा २३ चिदा । रुजौ हो ३ । हुम्मा २ । वाऽ२ सो३ऽ५ हायि ॥ आऽ५भी । षुणा३: सा ३ खीनाम् । आ । विता जरायि तॄ । णाम् । औ३हो हायि । शता २३म्भवा । सियोहो३ । हुम्मा २ । ताऽ२यो ३ऽ५ हायि ॥ ७ ॥

"एते वै पूर्णात् पूर्णमभ्युत्तिष्ठन्ति ये वामदेव्येन स्तुवन्त्यन्तरिक्षं वामदेव्यमन्तरिक्षेणेदꣳ सर्वं पूर्णम्" — इति ब्रा० १५। १२॥७॥

---

"इयं वै रथन्तरमन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लोकास्त्रिरात्रो यदेतानि सामानि सध्रीचि करोतीमानेव तल्लोकान् सन्दधाति तेन त्रिरात्रमाप्नोति"—इति ब्रा० १६।११॥५—७॥

---

॥ यज्ञायज्ञीयसाम ॥ ८ ॥

छ० १प्र० १अ० ४द० १ऋचि, गे० १प्र० २अ० २५साम।

३ १ २      ३ १२ ३ १ २ २ १२
यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे।
१ २ ३२३ १२ ३ १ २    ३२ ३ १ २र
प्रप्र वयममृतं जातवेदसं प्रियम्मित्रन्न शꣳसिषम् ॥८

४ ३   ४ १ ४ ५   १ र
यज्ञाऽ५ य। ज्ञा ३ वो ३ ग्नायाइ। गाइरा
२ १ २ २ १ ऽर १
गिरा। चा ३ दाक्षा ३ साइ। प्र प्रा २ वयमृतम्।
र २ १ २ २ १
जाता २३ वा। हुम्माइ। दा ३ सम्। प्रायम्मित्र
१ २२ ३१११११
न्नशा२ꣳसिषाउ। वा२३४५॥ ८॥

"ब्रह्मणो वा एष रसो यद् यज्ञायज्ञीयं यद् यज्ञायज्ञीयेन स्तुवन्ति ब्रह्मण एव रसे यज्ञं प्रतिष्ठापयन्ति"—इति ब्रा० ८।६॥८॥

---

"एतद्वै प्रत्यचं महाव्रतं तस्य गायत्रए शिरो बृहद्रथन्तरे पक्षौ वामदेव्य मात्मा यज्ञायज्ञियं पुच्छं दक्षिणा एवाको नैम वाव प्रत्यचं महाव्रतेन स्तुते य एतेन यजते"—इति ता० १६।११ ॥ ४-७ ॥

---

## ॥ इन्द्राणीसाम ॥ ६ ॥

छ० ३प्र० १ध० १द० १०ऋषि, गे० १५प्र० २म० ११साम।

न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
न क्येवं यथा त्वम् ॥ ६ ॥

न । क्येना की । आयिन्द्रत्वदुत्तराम् । न ज्यायोऽ
२ । अस्ता२३इ ह । हुं ऽ२ हुम् । वा २३४ हान् ।
नक्ये । वं या २३या । हुं ऽ२हु२४३म् । तू ३४५वो ६
हाइ ॥ ६ ॥

"आप्यद्य चदके तिष्ठन् नकोनाकी इत्येतत् त्रिःसमक्ती गायेदेतसर्वंवापोगतसश्रित मेतेन वा सर्वान् कामा-मवाप्नोति यवेवं वेद यवेवं वेद ॥"
—इति सा० ब्रा० १।४।१८ ॥

---

॥ भर्गयशसी सामनी ॥ १०,११ ॥

छ० ३प्र० २अ० २द० ६ऋचि, आर० २प्र० २अ० ११साम भर्गम्।

२१ १र ३ १२ ३१२
बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
२३ १ ३१२ ३ १२ ३२ ३१२ १ २
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥१०

२र र रर र १र २ रर
हाउधामयत्। हाहाउधामधामायत्। हाहाउ
र १ २ र १ २ ५
वृहद्धामधामायत्। बृहदिन्द्रा। यगा२या२३४ता।
१ र १ २ ५ २र र
मरुतोइ। वृहा२न्ता२३४माम्। येनज्योतिरजनयन्।
१ २ ५ २र र र १ २ ५ २र
ऋता२वा२३४र्द्धाः। देवन्देवा। यजा२गृ२३४वी। हाउ
र १र र र १र २ र र र १र
धामयत्। हाहाउधामधामायत्। हाहाउवृहद्धामधा।
२ २र र र १ १।११
मा२या२३४। औहोवा। ए३। भर्गा२३४५ः॥ १०॥

छा० १प्र० ३द० १०ऋचि, आर० ४प्र० २अ० १२साम यशः।

( यशःसाम्न ऋक् खलु अविकृतैव गृह्यते )

२५ १ र २र १र र २ १र २५
हाउ। ३। वा। यशोमाद्यावापृथिवी। हाउ।
१ र २र. १र ५ २५ १ र
३। वा। यशोमेन्द्रवृहस्पती। हाउ। ३। वा। यशो
५ १ र २र १ २ र
भगस्यविन्दतु। हाउ। ३। वा। यशोमाप्रतिमुच्यताम्।
५ २ १ र १ १ २५
हाउ। ३। वा। यशस्वियस्याः सछ्सदः। हाउ। ३। वा।

२ १ २ १२ र १५ १ २
अहं प्रवदितास्याम् । हाउ । ३ । वा । अश्वमिष्टये ३
५
इस् ॥ ११ ॥

"भर्ग एव भर्गेण तुष्टुवानो भवति यशो यशसा"—इति,
"भर्गयशसी भवतो भर्गेणैवास्मै भर्गों दधाति यशसा यशः"—
इति च ब्रा० १५ । ३ ; १८ । ८ ॥ १०,११ ॥

---

॥ परमेष्ठिप्राजापत्यव्रतम् ॥ १२ ॥

आ० १प्र० ३द० १ऋचि, आर० ४प्र० १प० ७साम ।

१ ३ २ ३ ३ १ १ र ३र ३ २ ३ १र २र
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः ।
१ २ ३ १ २ ३ १र ३
परमेष्ठी प्रजापतिर्दिवि द्या मिव दृꣳहतु ॥ १२
२र १ — १ १ —
हाउ । ३ । आनो २ व्रुवाह । २ । आनो २
१ २ १ ३र र १ २र र ३ १११
व्रुवा२ या२३४ । औहोवा । रचतनोरचितारा२३४५: ।
२र १ — २र र १ २र र
हाउ । ३ । आनो २ व्र० पूर्वपाठः । गोपायतगोपा
र ३ १११ २र १ — १ ३ १ २
यितारा२३४५: । हाउ । ३ । आनो २ ० । मयिवर्चः
१ २ — १र १ १ २ —
अथोया १ शा २: । अथोयज्ञ । स्ययात्पा १ या २: ।
२ र२र १ २ — ३ १र १ २
परमेष्ठी । प्रजापा १ ती २: । दिवियामि । वहंहा१
२र १ — १ १र र
तु २३ हाउ । ३ । आनो २ ० । रचतनोरचिता

२ ११११ २र १ — २रर १ २र
रा २३४५: । हाउ । ३ । आनो २ ० । गोपायतगो
र र २ ११११ २र १ — २र
पायितारा २३४५: । हाउ । ३ । आनो २ ० । ए ।
१ २र र र र र १ २रर र २र
रक्षतनोरक्षितारोगोपायतगोपायितारः । २ । ए ।
१ २र र र र र १ २रर र ११११
रक्षतनोरक्षितारोगोपायतगोपायितारा २३४५: ॥१२॥

"रोहिण्यां वा रोहिण्या गोः सरूपवत्साया पयसि रक्त-शालीनाए स्थालीपाकए श्रपयित्वा परमेष्ठिनः प्राजापत्यस्य-व्रतेनाभिजुहुयात्सहस्रकृत्वः अतोवर मेतेनैवाभिगोयोद्धृत्य सभार्यः प्राश्नीयात् सुरूपान् दीर्घायुषः पुत्रान् लभते" सा० ब्रा० २।८॥१२।

---

## ॥ अर्कपुष्पसाम ॥ १३ ॥

ऋ० ६म० २अ० २३० ११ऋषि, गे० १६प० २अ० ३४साम ।

२ १२ २ १२ २१ २र २ १२
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि
१ १२ १२ १२उ २ १ २ २१ २
विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास
१ २र १ १ २र
इद्वहन्तः सं तदाशत ॥ १२ ॥

२ १ २र १ २१ २ १ २
पवित्रन्तेविततंब्रह्मणस्पतेः । हुवे२३ । २ । हो
२ २ २ १२ २र १ १र १
वा३ हा३ । हाइ । प्रभुर्गात्राणिपरियेषिविश्वता२३: ।
र १२ २ १ १ २ ११
हुवे२३ । २ । होया३ हा३ । हाइ । अतप्ततनून

५र १र ३ ३ १ २ २ २
तद्दा२ मोऽग्नु ते ३। हुवे २३ । २ । होवा३हा३हाइ
१र २ १ २ १ ५र १ १ २
ऋतासद्दूतहन्तःसन्नदा२शत । हुवे२३ । २ । होवा३
२ २ ५र र २ १र र र र १र
हा३ । हा३४ । औहोवा । अर्कदेवाना२स्परमेवि
र २ । । । ।
यो२मा२३४५न् ॥ १३ ॥

"अर्कपुष्पं भवत्यन्नं वै देवा अर्क इति वदन्ति रस मस्य पुष्प मिति च रस मेवान्नाद्य मवरुन्धे ऽर्कपुष्पेण तुष्टुवानः"—इति ब्रा॰ १५। ३ ॥ १३ ॥

---

## ॥ सेतुषाम ॥ १४ ॥

आ॰ १प्र॰ १द॰ ८क्रचि, आर॰ २प्र॰ १च॰ ३४साम।

३ १ २ ३२ ३ २ ३ १२ ३१ ३ ३ १ २ ३ १ २
अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम।
१ १२ ३ २उ ३ १ २ ३२उ १२ १२ ३१२
यो मा ददाति स इदेव मावदह मन्न मन्न मदन्त मद्मि॥

२र १र र २ २ १ १र
हाउ । २ । सेतूᳫस्तर । ३ । दुस्त । रान् । ३ । दा
२र १र र २ २र र १
नेनादानम् । ३ । हाउ । ३ । अहमस्मि प्रथमजाऋता
२ १ १ १ १ २र ० १र र २ १
२३स्या२३४५ । हाउ । ३ । सेतूᳫस्तर । ३ । दुस्त ।
र २र १र २ १ र २र १र
रान् । ३ । अक्रोधेन क्रोधम् । २ । अक्रोधेनक्रोधम् ।
२र र र र र १ २ १ १ १ १
हाउ । ३ । पूर्वं देवेभ्यो अमृतस्य ना २३मा२३४५

२र  १र र  २  २ १  २ १ र
हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् । ३ । अद्धया
२र  २र  २र र र  र १  २,
अद्धाम् ।३। हाउ । ३ । योमाददाति स इदेवमा२३वा
१ १ १ १  २र  १र र  र  २ १
२३४५त् । हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् ।
२ १र र  र  २र  १  २,
सत्येनान्तम् । हाउ । ३ । अहमन्नमन्नमदन्तमा२३ द्मौ
१ १ १  २ऽ  ऽ  ऽ  २र १र  ५  २र १ २
३४५ । हाउ हाउ हाउवा । एषा गतिः । ३ । एतद-
१ २  १र  २  १र र  २र
मृतम् । ३ । स्वर्गच्छ । ३ । ज्योतिर्गच्छ । ३ । सेतूꣳस्तो
१र २ १  १ १ १ १
र्त्वाचतुरा २३४५ः ॥ १४ ॥

"आजाआजौ शुक्लपक्षे राजनरौहिणके शुक्रियार्ये हाउस्वर-
तादीनि चत्वारि सेतुषाम चैव: पवित्रवर्ग एतेषा मेक
मनेकं वा सर्वाणि वा प्रयुञ्जानः पूतो भवति"

—इति सा० ब्रा० २ । १ ॥ १४ ॥

---

॥ तवश्यावीयं साम ॥ १५ ॥

॥ एतच्च साम गेयादिचतुर्गानग्रन्थेभ्यः पृथगेवाधीयते ॥

॥ मूलमन्त्रस्य गायत्री, व्याहृतयः, स्तोभाश्च ॥

१  १ १ १ १  १ र ५  र  २ १  २
ॐहुऽ२३४५ । ॐभूः । ॐभूमिर्दिवमन्तरिक्षम् ।
१  र  र  र र २  १  र र
ॐभुवः । ॐऋचोयजूꣳषिसामानि । ॐभार्गोदेवस्य
र  १ १ १ १  १  र र र र र
धीमाहो २३४५ । ॐस्वः । ॐप्राणोपानोव्यानः

र २र १ १र२१र र २ १११ १ १
समानउदानः । ॐधियोयोनःप्रचो२३४५ । ॐ

महः । ॐजनः । ॐतपः । ॐसत्यम् । ॐपुरुषाः ।

र र २१ १ ११११
ॐपरोरजोअमृतोम् । ॐहꣳ२३४५ । हुम् ।

— १ २ ११११ १र र
आ२ । दायो । आ २३४५ । ॐभूमिरन्तरिक्षन्द्यौः ।

र १ र
ॐतत्सवितुर्वरेणियोम् । ॐऊऽ२र्क् । हाउ३ । हो३

२ ११र र२र१ १ २
वाक् । ॐवह्नोआयजोअमृतोम् । ॐऊऽ२र्क् । हाउ३ ।

२ १रर र र र र १र१
हो३वाक् । ॐप्राणोपानोव्यानोसमानउदानः । धि-

र र २११११ १ र २
योयोनःप्रचो२३४५ । ॐऊऽ२र्क् । हाउ३ । हो३वाक् ।

१ऽर १ १२ १२ २१र१
३ । धर्मो२धर्मः । धर्मविधर्म । ३ । सत्यज्ञाय । ३ ।

२१ २ १ ऽ १ ऽ १
ऋतंवद । ३ । हꣳवंव२वंव२वम् ॥ १५ ॥

"तमञ्चावीयं मनुष्यानः शुचिः पूतो ब्रह्मलोक मभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते" इति सा० ब्रा० २।१।१५॥

---

## ॥ भारुण्डसाम ॥ १६ ॥

॥ एतदपि साम गेयादिचतुर्गानग्रन्थेभ्यः पृथगेवाधीयते ॥

॥ मूलमस्य इदयमितिमन्त्रः, छ १।२।२।४, सोमाय ॥

१२र १ १२ १ १२ २ १२ २ १२
इमᳫँ स्तोम मर्हते जातवेदसे रथमिव सम्महेमा

मनोपया। भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषाम वयं तव ॥ १६ ॥

उद्वयाम्। तमसस्पारी२। ज्योतिःपश्यन्तउत्त-रा२म्। स्वःपशान्तउत्तरा२म्। देवन्देवत्रा२सू२३४ रीम्। अगन्मज्योतिरुत्तमा१म्। स्वसारआतोतुन-आतोतू३४। औहोवा। ऊ२वातः। ३। वातो वातः। २। वातोन्तृष्णानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। दूमाऽस्तो २३४माम्। अहोति२३४जा। तावेदसे३। होइ। होइये३। ३। होइये। ३। ऊ२वातः। ३। वातो वातः। २। वातोन्तृष्णानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। रथा२ मो३४वा। सम्माहे२३४मा। मानो। पया३। होइ। होइये३। ३। होयिये। ३। ऊ२वातः। ३। वातो वातः। २। वातोन्तृष्णानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। भद्राहो२३४नाः।

१ २ ५ १ २ १२ १ ३र
प्रमातौ२३४रा । स्यासऽसदे३ । होइ । होयियै३ ।
३र४५ —१र १रर २र
३ । होइये । ३ । ऊरवातः १ ३ । वातोवातः । २ ।
१रर २ १र २ २ १ २ १ २
वातोन्नृम्णानिपुरा३याः । यमोहाउ । ३ । पितरोहाउ ।
१र २र र २ २ ३ ५ २ ३
३। भारण्डोहाउ ।३। अग्नाइसा२३४ख्याइ । माराइपा
५ १ २ १ १ १ ३र ४ ५
२३४मा । वायन्तवा३ । होई । होइयेरं । ३ ।
३र४५ —१र १र र २र १र र
होइये । ३ । ऊरवातः । ३ । वातोवातः । २ । वातो-
२ १र २ २ १ २ १ २
न्नृम्णानिपुरा३याः । यमोहाउ । ३ । पितरोहाउ । ३ ।
१र २र र ३र २र ५र र १र १र र
भारण्डोहाउ । ३ । भारण्डा३४औहोवा । ए । वातो-
२ १र २ १ १ १ २ १ २र १र २र १र र २
न्नृम्णानिपुरयद्द्यमःपितरोभारण्डः । २ । ए । वातोन्नृ-
१र २ १ २ १ २ १ २र १र ३ १ १ १ १
म्णानिपुरयद्द्यमःपितरोभारण्डा२ । ई२३४५ ॥ १६ ॥

॥ महानाम्नीसाम ॥ १७ ॥

एतत्तु अमृतसंहितायां पञ्चमं द्रष्टव्यम् ॥ १७ ॥

"सप्तदश भाजा भवति प्रजापतिर्वै सप्तदशः प्रजापति मेवाप्नोति" —इति, "सप्तदशो वै प्रजापतिर्यत् सप्तदशं व्रतं भवति प्रजापति मेवाप्नोति" —इति च ब्रा॰ २२।५ ।१—१० ॥

इति सामश्रमीत्युपनामावसथ्यीसत्यव्रतशर्मणा
सङ्कलितानि ऋग्ब्राह्मणसहितानि
सप्तदश महासामानि ॥

———

# ॥ अथ संहितासप्तकम् ॥

## १ ॥ अमृतसंहिता ॥

"प्रथमस्त्रिवर्गः सावित्र्यां गायत्रं महानाम्न्यश्चैषामृता नाम संहितैतया वै देवा अमृतत्व मैति य एवं वेद"—इति सा॰ ब्रा॰ १।४।२३-२५ ॥ १ ॥

छ॰—१प्र॰ १अ॰ १द॰ १ऋचि,
गे॰—१प॰ १प्र॰ १अ॰ १-२ त्रीणि सामानि।

४   २र र   १   २ —   १
ओग्नायि। आयाही ३ वोइतो यो २ इ। तोया
१ र २र   १   —   १   —
२ इ। गृणा नोह। व्यदातोया २ इ। तो या २ इ।
१   २र १   १   २   ४र र
नायि हो तासा २३। त्सा २ इ। वा २३४ औहोवा।
३
ही २३४ पी ॥ १ ॥
४ ५   ४र ५र   ४   १   र र   र
अग्न आयाहि वी। तयाइ गृणानो हव्यदाता
र   १र र र   २ १   ५ १   २
२३ याइ। निहोतासत्सिवर्ही २३ इषि। वर्ही २ यिषा
५र र   २   २ १ १ १ १
२३४औहोवा। वर्ही ३ पी २३४५ ॥ २ ॥

अग्न आयाहि। वा५ यितयाइ। गृणानोहव्यदा

१ ता ३ ये। निहोता २३४ सा। त्वा २३४ यि बा३।

हा २३४ यिषो ६ हाइ ॥ ३ ॥

उ॰—६प्र॰ ३अ॰ १०सू॰ १ऋचि, एकं साम।

तत्सवितुर्वरेणियोम्। भार्गो देवस्य धीमाही २।

धियोयोनः प्र। चो ऽ१२१ऽ२। हुम्। आ२।

दायो। आ२४५ ॥ ४ ॥

महानाम्न्यार्चिके सोपसर्गढचत्रिके एकं साम।

ए२। विदामघवन्विदाः। गातुमनुशꣳसिषः।

दाइशा ३१ उवा २३। ई३४डा। ए २। शिक्षा

शचीनाम्पताइ। पूर्वीणाम्पुरू२। वसा ३१ उवा २३।

ई३४डा। आभिष्टमभा २ इ। ष्टिभिरा ३१ उवा

२३। ई३४डा। स्वर्णांꣳशूरः। हा ३१ उवा २३।

२₄ २ १ र र १ २ २ १र
ई ३४ डा । आ । चेतन प्रचेतया । इन्द्रा । द्युम्ना-
— १ १ १ २ १र — १
यना २ इयाई । इडा । इन्द्रा । द्युम्नायना २ इयाइ ।
१ २ १र — १ १ र र
अथा । इन्द्रा । द्युम्नायना २ इयाई । इडा । एवा
र र र र र २ र २ २ १
हि शक्रो राये वाजाय वा १ ज्रो३वाः । शविष्ठ
२ ४ ५ १ १
वज्रिन्ना३ । जा साइ । मꣳहिष्ठ वज्रिन्ना२३ हो ।
२ १ १ १ १ १ १ २
जासा ३१ उवा २३ । इट् इडा २३४५ । आया ।
१ — १ १ १ १ १ १ —
हि मिव मा २ त्सुवा । इडा २३४५ । (१) । ए २ ।
२ १र र र र १ र र र —
विदारायेसुवीरियाम् । भुवो वाजानाम्पतिर्वशाꣳ२ ।
१ २ २₄ ५ १ — १ २
अनुश्रा ३१ उवा २३ । ई३४डा । ए २ । मꣳहिष्ठ
१र र ऽ २₄
वज्रिन्नृञ्जसाइ । यः शविष्ठः शूरा २ । णा ३१ उवा
२₄ ५ १र र र २₄
२३ । ई ३४डा । यो मꣳहिष्ठो मघो ऽ२ । ना ३१
२ ५ ४ १ र ऽ २₄
उवा २३ । ई ३४ डा । अꣳशुर्न्न शोचा २इः । रा
२₄ ५ १ र र
३१ उवा २३ । ई ३४ डा । चाई । किलो अभिनो

नया । इन्द्रो । विदेतम् २ सु हाइ । इडा । इन्द्रो ।
विदेत मू२स्तुहाइ । अया । इन्द्रो । विदेत मृ२ सु
हाइ । इडा । ईम्रेहिमक्रत्त । सूतयेहवा १ माइ
हाइ । जेतारमपरा ३ । जाइताम् । सनः स्वर्पदता
२३ होइ । हाइपा ३१ उवा २३ । इट् इडा
२३४५ । क्रातूः । छन्दऋता २ स्वृहात् । इडा
२३४५ । (२) । ए२ । इन्द्रस्सनस्यः सा तयाइ ।
हवामहे जेतारमपरा २ । जितमा ३१ उवा २३ ।
ई २४ डा । ए २ । सनः स्वर्पदतिद्विषाः । सानः
स्वर्पदता २ इ । द्विष आ२१ उवा २३ । ई३४ डा ।
पूर्वसयत्त्रआ२ । द्रिव आ२१ उवा २३ । ई३४डा ।
पाण्युर्म्मदाया २ । हा२१ उवा २३ । इ२४ डा ।
सु म आर्षेहिनोवसाउ । पूर्त्तौः । प्रविष्ठ शा२स्य

१ १ २ २ १ १ २
ताई । इडा । पूर्त्ती: । शवि० । अथा । पूर्त्ता: ।
२ १ १ १ २ २ २ २ २
शवि० । इडा । वशीहि शक्रो नूनन्तन्नव्यꣳ सा१न्या
२ २ १२ २ ४ ५ १ २
३ साइ । प्रभोजनस्य वा ३ । वाहान् । समर्येषु
१ २ १
ब्रवा २३ होइ । वाहा ३१ उवा २३ । इट् इडा
ऽऽऽऽ १२ २२ १२ — २ १ १
२३४५ । शुरो । योगोपुगा २ च्छताइ । इडा ।
२ १२ — १ १११२ १ १ २
साखा । सुशिवोर दयू: । इडा २३४५ ।(३)। आइवा ।
२ १ ऽऽऽऽ १ २ २२
हियेवा २३४५ । होइ । हो । वाहा२१ उवा २३ ।
२२ २ १ २ १ ऽऽऽऽ १
ई३४ डा । आइवा । हियग्ना २३४५ । होइ । हो ।
२२ २ ५ १ २ १
वाहा २१ उवा२३ । ई ३४ डा । आइवा । हिइन्द्रा
१११२ १ १ २ २१ ऽऽऽऽ
२३४५ । होइ० । आइवा । हिपूषा २३४५ न् ।
१ १ २२ २ ११११ १
होइ० । आइवा । हिदेवा २३४५: । होइ । हो ।
२२ २ १
वाहा २१ उवा २३ । ई ३४ डा ॥ ५ ॥

## २ ॥ माधुच्छन्दसी संहिता ॥

"इन्द्रं ह्यन्वोजसेति प्रथमोत्तमे त्वामिद्धा ह्योनरः स पूर्वो मह्वीनां पुराभिन्दुर्युवा कविं रुपमच्छे मधुमतिं चियन्तः पवस्व सोम मधुमां ऋतावा सुरूपक राष्ट्रसं माधुच्छन्दसं मेधा माधुच्छन्दसी नाम संहितेतया वै देवाः स्वर्गंलोक मायन् स्वर्गलोक मेति य एवं वेद"—इति सा० ब्रा० १।४।२६-२८॥ २॥

छ०—२प्र० २अ० ३द० १ऋचि,
गे०—२प० ५प्र० १अ० १०,१२ द्वे सामनि।

५ ५ २ १ २ १ २
इन्द्रा६ मी। हियाश्नू ओ १ जासा २। सुतं
१ २ १ २ १२
राधा। नाम्पा१ता२इ। पिबातुवस्या गिर्वाणा२३४:।
३२ ३२ १ २ २र २ २
पिवा ३४ तुवा ३। स्वा२गा२३४ औहोवा। वा२
५
३४णा: ॥ १ ॥

५ २र २ १ २ १ २र
इन्द्रं ह्यनू६ ओजसा। सुतं राधा। नाम्पातो।
२ २ १ २ १ २र २
हो वा ३ हाइ। पिबातुव। स्वगाइर्वाणो। होवा३
२ १ २र २ २ १ २
हाइ। पिबातु वो। हो वा२ हा। स्वगार्वे ३:।
१ २ २र २ २ १ २ ११११
वा१ना२३४ औहोवा। घृतश्चुता २३४५: ॥ २ ॥

छ० ४प्र० १ष० १द० १०ऋचि, गे० २प० ८प्र० १ष० १३साम।

२र ४२र २ ३४र ५ ५ २१ २
त्वामिदा। होइ। हियो नरा ६ ए। अपीइप्य
१ २ ३ ५ १ २१र २र
न्वा। व्वा दूनुभूर्णा २३४ याः। स इन्द्रस्तोम वाहसः।
१ २ ३र २ ३र २ १ २
इहाय्रूधा। औहो २४ वा हाइ। उपास्वासा।
३र २ ३र २ १र २ १
औ हो ३४वाहा। रसागा२३ हा ३४३ इ। ओ
२३४५ इ। डा ॥ ३ ॥

छ० ४प्र० २ष० २द० ४ऋचि, गे० २प० ८प्र० २ष० १०साम।

४र र र ५ ४र १ र
सपूर्व्यीमहोना६ मे। वेनः क्रतू३ भाइ रान
र २ २ ५ २ ३ १ —
जे३। हा ३ हा। औ३हो३वा। आयिही २। यस्य
र ५र १ २ २ २ ५ २ २
हा रा२३मानुः पिता ३। हा३हा। औ३हो३वा।
१ — १ र २ २ २ ५
आयिही २। दायि वेपुधा३। हा३हाइ। औ३
२ ३ १ — १ २ २
होश्वा। आयिही२। य आ २१। ना२ जा २३४
४र र २ १ ३ ११११
औहोवा। मधुसुता २३४५ः ॥ ४ ॥

छ० ४प्र० २घ० २द० ८ऋचि, गे० २प० ८प्र० २घ० २१ साम।

१२ ३ २३४२ १ १ २ २ २ १२
पुराभिन्दुर्युवाकविः। अमितौजा अजाया २३
२ १ २ २ १ २३ ५
ता। आइन्द्रो विश्वा ३। स्याकर्मा २३४ णाः।
१ २ ३ ५ ४
धर्त्ता। वाज्रीवा ओ २३४ वा। पुरूप्रुताः। हो ५
इ। डा॥ ५॥

छ० ५प्र० २घ० १द० ८ऋचि, गे० २प० १२प्र० १घ० ७साम।

४ ४ ५ २ ५ ४ ५ ४ १
ओवा। उपप्रक्षेमधुमतिक्षियन्तः। ओवा। ओयि।
१२ २ २२ १ २ १ १
पुष्येमरयिन्धामहेत आ २३ यिन्द्रा। ओ। वा।
२ २२ २ ५
ओवा। ओ। वाहा २१ उवा २३। ऊ३४ पा॥६॥

छ० ६प्र० १घ० ४द० १०ऋचि, गे० ३प० १५प्र० २घ० १५साम।

२ ३ १ २ ३ २ ११ १२
हाओ २३४ हा इ। इहा ३१। मवस्वसो। मा २
१ २ ३ २ १ २१२ २ १
मधु। माए ऋ ता वा। घमोवसा। नो २ अधि।
२ १२ ३ १ २१२ २ १ २ ३२ १
सानो अव्याइ। अवद्रोणा। नी ३ घृत। वन्तिरोहा।
२ ३ १ १२ २ १ २ १
हा ओ २३४ हा इ। इहा ३१। मदिन्तमो। म त्सरः।
२ २ ३
आ ३४१ इ। द्रा २ पा। ५ ना ६५६ः॥७॥

छ० २प्र० २भ० २द० ६ऋचि, भा० २प० ३प्र० २ध० ४ साम।

२र १२११२र १२१ १ १२
सुरूपकृत्नुमूतये। सुदुघामा। वगोर। दुह्याइ
३ ५ ५ ५ २१र १
१उवा२३। इ२३४डा। सू२३४वा:। जुहूमा२३सी
१ २ १ २
द्यविद्यवियां३१उवा२३। ज्यो२३४ती: ॥ ८ ॥

---

३ ॥ रुद्रसंहिता ॥

"आवोराजा तद्दोवर्गे चाव्यदोह्यानि देवव्रतानि चैषा रौद्री नाम षण्हितैतां प्रयुञ्जन् रुद्रं प्रीणाति"—इति सा० ब्रा० १।४।२८,३० ॥

छ० १प्र० २भ० २द० ७ऋचि, गे० १प० २प्र० २भ० ३साम।

४र १र २ ४ ३ २ १ २ ३ ४ ५ १ २र १
आवोराजा। नमध्वरस्यरुद्राम्। हो। ता। राम्।
२ १ २ १ ४ ५ २ १
स। त्ययजा३म्। रोदसीयो:। अग्निम्पु। रा।
२ ३ २ ३ ४ ५ ५ २ १ २ १
तनयि। तोरचित्तात्। हिरण्य। रू। पा३मव।
२ २ ३
सा३४३। यि। का३र्णूप्ध्वा६५६म् ॥ १ ॥

छ० २प्र० १अ० ३द० १ऋचि, गे० २प० ३प्र० २अ० १-४पर्व्वादि।

तद्वोहोवा । गाया२ । सुताइसा२३४चा । पुरु-
हूता । यसात्वा१ना२इ । शंयत् । हा । औ३होइ ।
गा२३४वाइ । ना२शा२३४औहोवा । ए३ । किने
२३४५ ॥ २ ॥

तद्वोगाया । सुताइसचा३ । पूरु२३हूता२३४ ।
हाहो२ । यासत्वा२३४नाइ । शंयन्ना२३वे । नशौ२ ।
हौ२ । हुवो२३४ । वा । कापुइनो६हायि ॥ ३ ॥

तद्वोगायसुतेसचा६ए । पूरुहूतायसत्वने । पुरु-
हूता । यासत्वा२३ना२३४इ । शंयत् । गौवाओ२३४
सा । ना२३धा३ । का२३४५इनो६हाइ ॥ ४ ॥

तद्वोगायसुतेसचा६ए । पुरुहूतायसत्वनायि ।
शंयन्ना२३वे । ऐ२हो१धा२३इधौ । नशा२३ । का२
इना२३४औहोवा । ई२३४५ ॥ ५ ॥

छं० १प्र० २अ० २द० ५ऋचि, आर० १प० १प्र० २अ० १६–१८वीणि।

२र २र २ ४र५ २र१र
हाउ। १। आज्यदोहम्। २। मूर्द्धानन्दाइ।
२ १ २ २ ४ ५ २र१र २१२
वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ।
२र३र४५ २१ २ १ २३४र
जातमग्नीम्। कविꣳसम्रा। जा३मतिः। थिञ्जना-
५ २र१ २ १ २३४र५ २र
नाम्। आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ३।
२र ३ ४र५ २र ३ ४ २र
आज्यदोहम्। २। आज्यदोपूहाउ। वा। ए।
२र १ २ २र र १ २१११११
आज्यदोहम्। २। ए आज्यदोहा२३४५म्॥ ६॥
२र र १२ १२
हाउ। ३। हूम्। चिदोहम्। चिदोहम्। २।
र१र २ १ २२ ४ ५ २र१र
मूर्द्धानन्दाइ। वा३अर। तिम्पृथिव्याः। वैश्वानराम्।
२ १र २र३४५ २र २ १
ऋतआ। जातमग्नीम्। कविꣳसम्रा। जा३मतिः।
२३४र५ २र१ २ १ २३४र१
थिञ्जनानाम्। आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः।
२र र १२ १२ ५
हाउ। ३। हूम्। चिदोहम्। चिदोहम्। चिदो३
२ ३११११
हाउ। वा३। ई२३४५॥ ७॥

हाउ । ३ । च्योहम् । ३ । मूर्द्धानन्दाइ । वा३

अर । तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जात-

मग्नीम् । कविऽसम्रा । जा३मति । थिन्नानाम् ।

आसन्नःपा । चा३न्नन । यन्तदेवाः । हाउ३ । च्योहम् ।

२ । च्यो३हाउ । वा३ । ए३ । ऋतम् ॥ ८ ॥

स्तो० ७प्र० ५खण्डे, आर० ३प० ५प्र० १ग्र० ६–प्लीघि सामानि।

अधिप । ताइ । मिवप । ताइ । घचप । ताइ ।

खःपताइ । धनपता२इ । ना२माः । मन्युनाहचहा-

सुर्योणखराड्यज्ञेनमघवाद्क्षिणास्यप्रियातनूराज्ञावि

यन्दोधार । इपभस्त्वष्टाहवेणयचीमतिरन्ने नगयःपृथि-

व्यामृगिकोग्निनाविश्वंभूतम । भ्यभवोवायुनाविश्वाः

प्रजाश्चम्यपवयायपट्कारेणार्द्धभाक्सोमेनसोमपाःसमि

त्यापरमेष्ठी । येदेवादेवाः । दिविषदः । स्तेभ्योवोदेवा-

देवेभ्योनमः । येदे० । अन्तरिक्षसदः । स्तते० । येदे० ।
पृथिवीषदः । स्तते० । येदे० । अप्सुषदः । स्तते० ।
येदे० । दिवुसदः । स्तते० । येदे० । आशासदः ।
स्तते० । अवज्यामिवधन्वनोवितेमन्युन्नयामसिसृडतान्न
द्रूहस्मभ्यम् । डुडा२३भा । यद्रूदंविश्वंभूतम् । यूयो३ ।
आउ । वा२३ । ना२३४माः ॥ ८ ॥

अधिप । ताद्र । मित्तप । ताद्र । क्षत्रप । ताद्र ।
स्वःपताद्र । धनपता२द्र । ना२माः । नमउत्ततिभ्य-
श्चोत्तन्वानेभ्यश्चनमोनीषङ्गिभ्यश्चोपवीतिभ्यश्चनमोस्य-
द्भ्यश्च । तिद्धानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्च
नमः त्सरद्भ्यश्चत्सारिभ्यश्चनमःस्थि । तेभ्यश्चस्थायिभ्यश्च
नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःयेच-
विषयायच । अवज्यामिवधन्वनोवितेमन्युन्नयामसि

१२२ १२१२ १ १ २ १
मृडतान्नइहग्रस्माभ्यम् । इडा२३भा । यद्दद्विश्व-
२ २ २ १ १ २ ५
म्भूतम् ॥युयो३ । आउ । वा२३ । ना२३४मा: ॥१०॥
१ २ १ २ १ २ १
ऽअधिप । ताइ । मिचप । ताइ । मचप । ताइ ।
२१ २ — —१ १२ २ २१
स्व:पताइ । धनपता२इ । ना२मा: । नमोन्नायन-
२ २ २२ १२ २२ २ १२ २१२२१ २१२
मोन्नपतयएकाचायचावपन्नादायचनमोनम: । रुद्राय
२२ १२२१ २१२ २१ २२१२१ २२ १
तीरसदेनमस्थिरायस्थिरधन्वनेनम:प्रतिपदायचपटरि-
२२१२ १ २२ १२२१ २२ २१२ २
णेचनमस्त्रियस्वकायचक । पर्दिनेचनमश्राग्रायेभ्यश्च
२२१२ २०१ २१२ २ -१२ २१ २१२२
प्रत्याग्रायेभ्यश्चनम.क्राव्येभ्यश्चविरिम्फेभ्यश्चनम.सष्टतेच-
१२२ १२०१२ २१ १२१२२१ १२ १
विष्टतेच । यवज्यामित्रधन्वनोवितिमन्युन्नयामसिमृड
२१ १२१२ १ २ १
तान्नइहग्रस्माभ्यम् । इडा२३भा । यद्दद्विश्वम्भू-
१ १ ११ ६ ५
तम: । युयो३ । आउ । वा२३ । ना२३४मा: ॥११॥

## ४ ॥ विष्णुसंहिता ॥

"इदंविष्णुः प्रचस्यसप्त्याः प्रकाव्यमुग्रनेवक्रुवाप-इति वाराह मन्त्यं पुरुषमते चेपा वैष्णवी नाम संहितैतां प्रयुञ्जन् विष्णु प्रीणाति"-इति सा॰ ब्रा॰ १ । ४ । २१,२२ ॥

छ॰ ३प्र॰ १अ॰ ३द॰ ८ऋचि, गे॰ २प॰ ६प्र॰ २अ॰ १४ साम ।

५ ५ १ १२ ३ ५ १
इदा६मे । विष्णूः । विचक्रा२३४माइ । त्राइ-
र २ १ २ — १ — १ १
धानि । दधाइपा१दा२म् । समू२ढो१ । ढा२३मा३ ।
१ ३ १र र २ २
स्या२मा२३४औहोवा । ए३ । सुले१ ॥ १ ॥

आ॰ १प्र॰ ३द॰ ८ऋचि, आर॰ ३प॰ ४प्र॰ २अ॰ ७ साम ।

२र — १ १ २ १ २१
हाउ ।३। ऊर् ।२। ऊऽ२ । वा३ । हाउवा३ । इसूहस् ।
१ १ र र २१ र २ १र
अर्चिःशोचिस्तपोऽरः । प्रलस्यष्पोअरुपस्तनूसा२३
१ र र र र २१र २ र र
शाः । प्रलोयचोषिद्याजातवेदा२३साइ । वैश्वा-
१र २ १र र १र र र २ १
नरायमतिर्न्नव्यसेशू२३चीः । सोमइवपवतेचारुरग्ना-
२ २र — १ २
२३याइइ । हाउ । ३ । ऊर । २ । ऊऽ२ । वा३ ।
२ ११११११
हाउया३ । ई२३४५ ॥ २ ॥

छ० ६प्र० १ष० ४द० २ऋचि, गे० ३प्र० १५प्र० १ग्र० ३६साम।

२१ २ १ २१२ २१२ २२
हाउहाउ। हुम्। प्रकाषियाम्। उशनेव व्रु-
४ ५ २१ १२ २ १ २१ ३ ४ ५ २ १
वाणाः। देवोदेवा। नाइज्ञनि। माविवक्ती। महि-
१ २ २ ३ ४ ५ २१ २ १
व्रताः। शुचिवाइ। भुःपवाकाः। हाउहाउ। हुम्।
१ १२ २ १ २ २ ४
पदावरा। होइअभि। आइ४इयि। तीरापुद्ध
भाई५६न्॥ ३॥

पा० ४द० २-३ ऋचु, भार० ५प्र० १ष० १३—१७ पद्यसामानि।

२१ २ १ २ २ २
उहुवाहाउ। ३। सहस्रशीर्षाःपुरू२३षाः। सह-
२ १ २१ २ १२ २१२ २
स्राचःसहस्रार३पात्। सभूमिएसर्वतोवा२३त्वी।
१ २१२ २ १ २ १ ५
अत्यतिष्ठद्दशाङ्गू२३लाम्। उहुवाहाउ। २। उहुवाइ
२ १ १ १११
हाउ। वाइ। इटइडा२३४५॥ ४॥
२१२ २ — ८ १२ २ २ २
उहुवौहोवा२। ३। त्रिपादूर्ध्व उदैत्पुरू२३षाः।
१२२ २ २ २१ २ १२ ११ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।

अशनानशतेआ२३भी । उहुवौहोवा२ । २॥ उहुवौ।

होर । वा२३४॥ औहोवा । ई२३४डा ।उहुवौहोवा२

। २ । उहुवौ । होर । वा२३४ । औहोवा ।सु२३४

वा: । उहुवौहोवा२ । २। उहुवौ ॥ होर॥ वा२३४॥

औहोवा । ज२३४५ ॥ ५ ॥

। इयौहोवा२ । ३। पुरुषएवेद२ सा२३र्वामहा।

यद्भूतंयच्चभावा२३याम् । पादोस्यसर्वाभूता२३नी।

त्रिपादस्यामृतन्दा२३इवो॥ इयौहोवा२ । २ । इयौ।

होर । वा२३४ । औहोवा । ई२३४डा॥ इयौहोवा२ ।

२ । इयौ । होर । वा२३४। औहोवा॥ ज्यो२३४ती:।

इयौहोवा२ । २ । इयौ । होर । वा२३४ । औहोवा।

ई२३४५ ॥ ६ ॥

२र १र र २ १ २ २र
हाउ ।३। तावानस्य । महा२३इमा३ । हाउ ।३।
१र र र २१र २ २र १र र
ततोज्यायाꣳश्चपूरू२३षा३ः । हाउ ।३। उतामृतत्वस्ये
२ २र १ र र २१र २
शा२३ना३ः । हाउ । ३ । यदन्नेनातिरोहा२३तौ२ ।
१ ऽ २ १ १११९
हाऽउ । ३ । वा३ । ईटूडा२३४५ ॥ ७ ॥

२ ऽ १ र २१र २र २ऽ
हाऽउ३वा । ततोविराडजायत । हाऽ३उवा ।
१र २र १ २१र २ २ ऽ १ २र १र २
विराजोअधिपूरुषः । हाऽउ३वा । सजातोअत्यरि
२ ऽ १र र २ १ र २१ १ ऽ २
च्यत । हाऽउ३वा । पश्चाद्भूमिमथोपुरः । हाउवा३ ।
२११११
इ२३४५ ॥ ८ ॥

छ० २प० २प्र० १द० ५ऋषि, पार० ३प० ५प० १प्र० १८ सान ।

२र १२ १ १ १ २ १ २
हाउ । ३ । अस्मीनस्मिन् । ३ । न्ऋष्याद्भ्न्ऋणाम् ।
१ २ २र १ २ —
३ । निधाइमाहे । ३ । कयानश्चिना३आभु१वा२त् ।
२रर र १ २ ०— २र १ २
ऊतीसदावृ३धाःसा१खा२ । कयाशचिष्ठा३यावा१र्त्ता
२र १ २ १ २ १ २
२३ । हाउ । ३ । अस्मीनस्मिन् । ३ । न्ऋष्यायि

न्त्र्याम । ३ । निधादमाहि२ । निधा२३इ । मा२ । हा२३४ । औहोवा । सुवर्ज्योती२३४५: ॥ ९ ॥

---

## ५ ॥ विनायकसंहिता ॥

"अदर्दः सुम्बाणास आतुन इति वर्गो मृज्यमानःसुहस्त्येति प्रथम-मष्ठे चैषा वैनायकी नाम सएहिततां प्रयुञ्जन् विनायकं प्रीणाति"–इति सा० ब्रा० १ । ४ । २२,२४ ।

छ० ४प्र० १म० ३द० ३ऋचि, गी०२प० ८प्र०१म०२,४ द्वे सामनी ।

अदर्दरुत् । समसृजोविखानित्वमर्णा२३४वान् । वद्धधानाऽ३रामणाः । महान्ता२३४मीम् । द्रपर्वतं वियाद्वः । सृजाद्वा२३४राः । अवयद्वान । वा२३ हा२३४म् । ओ२३४५ई । डा ॥ १ ॥

अदर्दरुत्समसृजाः । विखानि । त्वमर्णवान्वद्ध धानाऽ३रा२३मणाः । महान्तामिन्द्रपर्वतंविया२३द्वाः ।

छ० २प० २म० २८० ३स्टचि, गी० २य० ५प० १अ० १६–१८सा०।

५र २ २ १ २ १ २र १
आतूनआ। द्रचुमा२३न्तास्। चाइचंग्रामा२३०
२ १ —१ २र ३ ५ १ —
हाइ। संगृ२भाया। महाहस्तो२३४हाइ। दचा२
१ १ ३ ४र २
यिणाइना। महा२३। हा२सा२३४औहोवा।
१२ १११११
दचिणे३ना२३४५ ॥ ५ ॥

५र २ ४ ५ १ ३ ५
आतूनइन्द्रक्षुमान्ताम्। चित्रा२इग्रा२३४भाम्।
२ २ ५ २र २ १ २ ५र २
संगभा२३४या। सा१हा३। हा२सा२३४औहोवा।
१ २र ३ १ १ १ १
दचिणेना२३४५ ॥ ६ ॥

१र २ १ ४ ५ ५
आतूनइ। द्रचुमा६न्ताम्। चिचंग्राभ०संगभा२
२ २ ३ ५
या। चिचंग्राभ०सम्। गृ। औ३होइ। भा२३४या।
२र १ २र १ २र
ऐहोइ। महाहस्तीदचा२३होइ। औहो। वाहो२३४
वा। णाप्यिनो६हाइ ॥ ७ ॥

५र २ ५ २ १ र र
आतूनइन्द्रद्युमा६न्ताम् । चित्रंग्राभ९संग्रभाया ।
२ १ र १ २ ५ ३ ५
चित्रंग्राभ९सम् । गृ२३ । इ३४५हा । भा२३४या ।
२र १ र र १ २र१ १र
ऐहोइ । महाहस्तीदृचा२३होइ । औहो । वाहो२५४
५ ४ ५ ५
वा । णा५इनो६हाई ॥ ८ ॥

छ० ६प्र० १ष० ३द० ७ऋचि, गी० ३प० १५प्र० १ष० ६,११ दि ।

५ र २ १ २ ४ ५
मृज्यमाना: । सुहस्तिया३ । सामू३द्राइवा ।
२ १ २ ४ ५ २ ५ ४
चमिन्वसा३इ । रायीश्म्याइशा । गंवहुला३म् । पुरू२
३ ५ १ २र १ २ २ १ २
स्पृ२३४हाम् । पवमाना । औ३हो । भियो२३४वा ।
४ ५
पा५सो६हाइ ॥ ९ ॥
४ १र ४ १ — १ — १ —
मृज्यमाना५:सुहस्तिया । समू३द्राइवा२ । चमा२
१ — १ २ २
यिन्वासो२ । रयिम्पिशङ्गम्बहुलम्पुरुस्पृहा । औ३हो ।
१ २ २१ ४ ४ ५
पवमा२३ना३ । भियो२३४वा । पा५सो६हाइ ॥ १० ॥

## ६ ॥ स्कान्दसंहिता ॥

आमन्द्रैरिन्द्रहरिभिरानीविश्वासुहव्यमसेनानीरिति वर्गाः पवित्रस्तं इति ह एषा स्कान्दस्य संहितैतां प्रयुञ्जन् स्कान्दं प्रीणाति”-इति सा० ब्रा० ४।१।२५, २६॥

छ० ३प्र० २अ० १द० ४ऋचि, गे० २प० ६प्र० २अ० २७-२८सा०।

५र २ १ २ २ १ २
आमन्द्रैरा। द्रहरिभाइर्याहिमयूरा३रोमाभाइइः।
४ ५ ४ ५ २ ३ ५ २र १
मात्वाकाइचोत्। नियेमू२३४रीत्। नयाशिनाः।
२ १ — १ १ ३ ५र र
अतिधान्वे२। वताऽ२३। आ२इहा२३४औहोवा।
२ ५
वा३३४याः॥ १॥

४र ५ ४र ५ ४ ४ २र १ २ १र
आमन्द्रैरिन्द्र। हापूरिभायिः। याहिमयूऽररोम
१र र २ १ र २
भाइः। मात्वाका२३इचीत्। नाइयेमुरित्।
१र २ १ २ १
नपाशा२३इनाः। अताइधा२३न्वे। वताऽ२३।
१ २ — ५र र २ १ १ १ १ १
आ२इहा२३४औहोवा। वयो३भी२३४५ः॥ २॥

४र ५ ४र ५ ४ ४ २र १ २ १र
आमन्द्रैरिन्द्र । हाधूरिभीः । याहिमयूऽररोम
— १ — १र र २ १र
भाउ । वा२ । माल्वा२ । केचिन्नियेमुरिन्नपाशिनाउ ।
— १ — १ र २ २
वा२ । आती२ । धन्वेवता३१उवा२३ । ई२३४
५
हौ ॥ ३ ॥

ऋ० ३म० २म० ३८० ७ऋचि, गी० २प० ७प्र० २म० ७-८सामानि ।

४र ए ४ ए २ १ — १ २
आनः । एविश्वा । सुहाव्या२म् । आइन्द्रऽसम ।
१ २ १ २ ए २ १ १२र
त्सुभू१याता । ऊ२३४पा । हा३हाइ । ब्रह्माणि
१ २र २ २ १ १ १ २ १ २ २
सवना । निहचहान् । परमा२३ज्याः । आर्चा३हाइ ।
१ १ ४ ए ४
पमा । औ३होवा । होपूइ । डा ॥ ४ ॥

एर र र ३ ए १ र र
आनोविश्वासुहाहाव्याम् । इन्द्रऽसमत्सुभूपतो ।
२ १ २ १ २ १
पन्ना२३ह्मा । णिसवना । निवृत्रहान् । परमा२
२ १ २ १ १ २ ४ ए ४
३ज्याः । आर्चा३हाइ । पमा । औ३होवा । होपूइ ।
डा ॥ ५ ॥

५र २ ४ ५ २ २
। आनोविश्वासुहव्याम् । इन्द्राम् । समत्सुभू

१ २ २ १ २
पत । उपाब्राह्माः २ । णिसवनानिवृत्रहन् । परामा

१ २ १
१ज्याः२ः । ऋचीषा२३मा२४३ । औ२३४५इ ।

डा ॥ ६ ॥

छ० ६प्र० १अ० ५द० १ऋचि, गी० ३प० १५प्र० २अ० १६-१८।

३ ५ २ १ ४ ५ २ १र २र १ १र र
होऽवा । उहुवा३ । होवा । प्रसेनानाइः । शूरो

२ २ ३ ४ ५ २ १र र १ २
आ३ । ग्राइरथानाम् । गव्यन्नेताइ । हर्षता३इ ।

२ ३ ४ ५ २ १र २ १ २ २ ३ ४
अस्यसेना । भद्रान्नुक्षखान् । इन्द्रहा३ । वांसखि

५ २र १र २र १ २ १ २ ३ ४ ५
भ्याः । आसोमोवा । स्वा३रभ । सानिदत्ताइ ।

३ ५ २ र २ ५ ५
होऽवा । उहुवा३ । होवा६ । हाउवा ॥ ७ ॥

५र ४ २ १ १ १ २ १र ५ १र ४ २ १ १ १
औहो३वा३४५ । प्रसे०—०भ्याः । औहो३वा३४५ ।

२र १र २र १ २ १ २ २
आसोमोवा । स्वा३रभ । सा३४३ । नी३दा५त्ता६५६यि ॥ ८

१२ ४ २ १११ २२२१ १२७२
औहोऽवा३४५ । असेनानाइः । शूरोऽग्रा३ ।
२ ३४ ५ २ २१ १ २ २ ३ ४ ५
यायिरथानाम् । गव्यन्नेताइ । हर्षताउ्यि । अस्यसेना ।
२२ २१ १ २ २ ३ ४ ५ १२ ४
भद्रान्कृण्वान् । इन्द्रहा३ । वांसखिभ्याः । औहो३
२ १११ २२ २ २२ १ २ १ २ २
वा३४५ । आसोमोवा । स्वा३रभ । सा३४३ । नी३
४ १ ११११
दा५ । ता२३४५ड्‌ ॥ ९ ॥

छ० ६प० २अ० २द० १२ऋचि, गी० ३प० १४म० २ख० ३४, ३५ ।

२ १ २२ १ २ १ २ १ २
पवित्रन्तेविततम्ब्रह्मणस्पते३ । हुवे२३ । २ ।
१ २ २ २ १२ २२ १ २२ १
होवा३हा३ । हाइ । प्रभुर्गात्राणिपर्येपिविश्वता२३: ।
१ १ १ २१ ५ ५ १२ २ १ ३ १२
हुवे० । अतप्ततनूर्नतदा२मोअश्नुते३ । हुवे० । शृता
२१ २ १ २ १ १ २
सइद्वहन्तःसन्तदा२शत । हुवे२३ । २ । होवा३
२ १ १२ २ २१२ २२ २ ५ १२
हा३ । हा३४ । औहोवा । अर्कादेवाना२म्परमे
२ १ ११११
वियोऽमा२३४५न् ॥ १० ॥

२ १ २र १ २ १ २ १ २र १
पविन्नन्तेविततंब्रह्मणस्पते३ । हुवाइ । औहो
१ १ १ २ १ १र २
वा२ । प्रभु० । हु० । अतप्त० । हु० । शृतास० ।
१ २र १ ३ ५र र २ १ २
हुवायि । औ । हो२ । वा२३४ । औहोवा । अर्कस्य
२१र १ १र ५ ३ ११११
देवाःपरमेवियो२मा२३४५न् ॥ ११ ॥

---

२७ ॥ पितृसंहिता ॥

"यद्दाउविश्पतिः सनादग्नेऽद्यमीमदन्तद्यभिविष्ट मक्षांस्समुद्रः कनिक्रन्तीति द एवा पित्रा नाम संहितेतां प्रयुञ्जन् पितृन् प्रीणाति"—इति सा० ब्रा० १।४।१७,१८ ॥

छ० २र्ध० १ष० २द० न्नऋचि, गे० १प० ३ख० १र्घ० २८ साम ।

२ १र ४ ५ १ र २र १ २र १र
यद्दाज२३विश्पतिःशिताः । सुप्रीतोमनुषोविशे ।
१ २ १ २ १२र ३ र १ १ २ ४ ५
विश्वाइदा२३ग्नीः । प्रतिरत्ता । सिसेधतां । औ३होवा ।
४
हो५इ । डा ॥ १ ॥

छ० १प्र० २अ० ३द० ८ऋचि, गे० १प० ३प्र० १अ० १८साम।

१ २ २ २ १र
अहा। वो३हा। वो३हा। सनादग्नाइ।
१ र २ ३ ४ ५ २ २र २ १
मृणासि। यातुधानान्। नत्वारचा। सी३षत।
१ ३ ४ ५ २ १ २ १ र २ ३ ४ ५
नासुजिग्यूः। अनुदहा। सहमू। रान्कयादाः।
१ २ २ २ २ १ २र १ २ १
अहा। वो३हा। वो३हा। मातादूहेत्याः। मुचत।
२ २ ४
दा३४३इ। वौ३याधूयाह५६: ॥ २ ॥

छ० ५प्र० १अ० ३द० ७ऋचि, गे० २प्र० ११प्र० १अ० २८साम।

३ ४ ३ १र ५ १ २ १ १ ५ ४र ५ र
अचन्नमीमद। तही३। आ२३४। वप्रियाअधू।
४ ५ १ २र १ २ १र २ १ र
पता। अस्तोपतस्वभानवः। विप्राना२३वी। घाया
२ र १र २ २ १ २ १र र
मती। योजानूइवा३इ। द्रा२ता२३४औहोवा।
३ ५
हा२३४री॥ ३ ॥

छ० ६प्र० १प० ४द० ६ऋचि, गे० ३प० १५प० २प० १०साम।

२ १ ५ ५ १र २ २ — ५
ओ३हाइ। ओ३हा। ओहा। इया२। ओ३

हाउए। अभिचिपा। हाउ॰हपु। गांवयोधाम्।
अङ्गोयियाम्। अवाव। मन्तवाणी:। वनावसा।
नोउवस। योनसिन्धू:। ओउहाइ। ओउहा।
ओहा। इया२। ओउहाइए। विरलधा:। दयते।
वा३४३। रीउयापुणा६५६यि॥ ४ ॥

छ॰ ६प्र॰ १म॰ ४द॰ ७ऋचि, गी॰ ३प॰ १५प्र॰ २प॰ ११साम।

हो। होइ। अक्रांत्समुद्र:प्रथमेविध।। मान्।
हो। होइ। जनयन्प्रजाभुवनस्यगो। पा:। हो।
होइ। वृषापवित्रेअधिसानो२अ। व्याइ। हो। हो।
बृहत्सोमो२वावृधे। स्वानोअ। द्रा। औउहोवा
हाउवा३। एउ। स्वानोअ। द्री२३४पूः॥ ५ ॥

छ॰ ६प्र॰ १म॰ ४द॰ ८ऋचि, गी॰ ३प॰ १५प्र॰ २प॰ १२, १३ हे।

कानी। क्रान्ती२क्रान्तीर। हरिरासृज्यमा२३

२ ४ ५ १ —१ — २ १
नाइ: । साइदान् । वानारवाना२ । स्वजठरेपुना२३

२ ४ ५ १ —१ — २ १
नाइ: । नृभी: । याता२याता२: । कृणुतेनिर्णिजा२३

२ ४ ५ १ —१ — १
ङ्गाइम् । धाता: । मातो२मातो२म् । जनयता२३ ।

१ २ १२ २ २ १११११
स्वा२धा२३४औहोवा । भी२३४५: ॥ ६ ॥

२ ४ ५ २ २ ३२१५ २
कनिक्रन्तिहा । होइ । हरिरासृज्य । मा२३४

२२ १ २ २२१ २ २ १
ना: । हाहोइ । सीदन्वनस्यजठरेपुना२३ना: । हाहोइ ।

२२ २ २१ २ २२ २
न्टभिर्यत:कृणुतेनिर्णिजा२३ङ्गाम् । हाहोइ । श्रतो

० १ २ १२ २
मताइम् । जनयता२३ । स्वा२धा२३४औहोवा ।

२ ११११
भी२३४५: ॥ ७ ॥

सामश्रमीत्युपनामावसथश्रीसत्यव्रतशर्म्मसङ्कलितं
संहितासप्तकं समाप्तम् ॥

# ॥ अथ बृहद्यज्ञपाठः ॥

॥ तत्रेदं गोभिलीयं सूत्रम् ॥

"भासं दशस्तोभ मुन्नयं गायत्रीसामौशनसं शुद्धाशुद्धीये राजनरौहिणके बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महादिवाकीर्त्यं ज्येष्ठसामानि देवव्रतानि पुरुषव्रतानुगानं तदश्वाश्वीय मादित्यव्रत मेकविंशत्यनुगानं पर्क्कादावारभ्य यथा शान्तदहरद्ब्रह्मयज्ञायेति गोभिलीया गोभिलीयाः।"—इति गो॰ व॰ सू॰ ॥ १ ॥

ॐ३म्। भासस्य वायुर्जगती सूर्यः।
दशस्तोभस्य प्रजापतिस्त्रिष्टुबिन्द्रः।
उन्नयेत्यस्य आदित्योऽनुष्टुबात्मा।
गायत्रस्य पुष्कलो गायत्री सविता।
औशनसस्य उशना गायत्री अग्निः।
शुद्धाशुद्धीययोरिन्द्रोऽनुष्टुबिन्द्रः।
राजनरौहिणयोरिन्द्रस्त्रिष्टुबिन्द्रः।
बृहत्साम्नो भरद्वाजो बृहतीन्द्रः।
रथन्तरस्य वसिष्ठो बृहतीन्द्रेशानौ।
सेतुसाम्नो विश्वोकस्त्रिष्टुबात्मा।

महानाम्नीनां प्रजापतिर्विराडिन्द्रः पुरीषपदानां पदपंक्तिर्वा ।
महादिवाकीर्त्यस्य सूर्यो जगती सूर्यः ।
ज्येष्ठसाम्नां प्रजापतिस्त्रिष्टुबग्निः ।
देवव्रतानां देवा उरक्तो रुद्रः ।
पुरुषव्रतानांपुरुषोऽनुष्टुप्पञ्चानांगायत्र्यग्निमाश्चात्मा ।
तवश्यावीयसाम्नः प्रजापतिर्गायत्री सविता ।
सत्वाभूतानीति विश्वेदेवास्त्रिष्टुबादित्यः ।
उवीचित्रंदेवा सन्तथरति चादित्यस्त्रिष्टुप् गायत्री सूर्यः॥
उत्तरयोरादित्या गायत्री सूर्यः ।
उदुत्यंचित्रमित्यतीषङ्गस्य सूर्यस्त्रिष्टुप् गायत्री सूर्यः ।
सधस्तस्य इन्द्रोऽनुष्टुप् सूर्यः ।
महतां भूतो गायत्री सूर्यः ।
सार्पराज्ञीनां प्रजापतिर्गायत्री सूर्यः ।
घर्मरोचनस्येन्द्रोऽनुष्टुप् सूर्यः ।
परिधीना मिन्द्रो गायत्री सूर्यः ।
ऋतुसाम्न ऋतवोऽनुष्टुप् सूर्यः ।
चक्षुःसाम्नो मित्रावरुणौ गायत्री सूर्यः ।
श्रोत्रसाम्नो मित्रावरुणौ त्रिष्टुप्गायत्र्यौ सूर्यः ।
शिरःसाम्न इन्द्रो गायत्रीत्रिष्टुभौ सूर्यः ।
जपे विनियोगः ॥

---

१ - भासम् ॥ आ० ३,८। आर० ६,१,८ ॥

२र र र४ ३र२र४ ३र २र १
हाउहाउहाउ। ओहा। २। ओहाइ। इ
र १र २१ १ र
हौहो। ३। इहियो। ३। हुम्। ३। हो। ३।
१ १र २१र र
हऌ। ३। इडा। ३। ऋतम्मे। ३। हुस्। ३।
३१ र २१र २ १र र र र २
प्रत्नस्यवृष्णोअरुषस्यनूमार३हाः। प्रनोवचोविदथाजात
१र २ २र र १र २१र २
वेदा२३साइ। वैश्वानरायमतिर्नव्यसेशूर२३चीः।
१र र र २१ २ २र र २र४
सोमइवपवतेचारुरग्ना२३या३इ। हाउहाउहाउ।
३र२र४ ३र २र १ र २र २ १
ओहा। २। ओहाइ। इ हौहो। ३। इहियो। ३।
१ १ १ १र २१र
हुम्। ३। हो। ३। हऌ। इडा। ३। ऋतम्मे। ३।
१ ३ ५र र १ र२र २१
हुस्। २। हा२३४। औहोवा। इ हौहो। भद्रम्।
१ र २र १र२ १ र २र २र१ १ र २र
इ हौहो। श्रेयः। इ हौहो। वामम्। इ हौहो।
१२ १ र २र १ १ र२र १ २ १ र२र
वरम्। इ हौहो। सुवम्। इ हौहो। अस्ति। इ हौहो।
१ र २र १ र २र १र २ र र
अभाजीत्। इ हौहो। ज्योतिः। अभाजीत्।

इ हौहो। दौदिवः। प२३। हियाहाउवा३।
आ२३४५स_॥ १

२ ॥ दयस्तोभम् ॥ ऊ० ४,१,१,६। आर० ४,२,१६ ॥

हाउहाउहाउ। ओहा। २। ओहा। हाओवा।
३। ऊ२। ३। ओ२। ३। हाउवाक्। ३। आयुर्यन्
। ३। एआयुः। ३। आयुः। ३। वयाः। २। वयः।
इन्द्रन्नरोनेमधिताहवा२न्ताई। यत्पार्यायुनजतेधिया
२स्ताः। शूरोनृषाताश्रवसश्चका२मायिं। आगोमति
व्रजेभजातुवा२न्नाः। हाउहाउहाउ। ओहा। २।
ओहा। (पूर्ववत्)। वयाः। २। वा२। या२३४।
औहोवा। ए। आयुर्धाअस्मभ्यंवर्चोधादेवेभ्या२३४५ः॥२

२ ॥ उन्नयम् ॥ स्तो० २,१०। पार० ६,२,२१ ॥

उन्नयामि। होइ। ३। आदित्यंमाध्वंयन्तमुन्न

२र १ २र र १र २र १
यासि। होइ। ३। अहोरात्राण्यरिचाणि। होइ।
१र २ १ र र र र २
३। द्यौर्नौंहोउ। २। तस्यामसावादित्यईयतेहाउ
१ र र रर २ १रर
। ३। तस्मिन्वयमीयमानईयामहेहाउ। ३। ईयामहे
२ १रर २ २ २१रर २ १ २र
हाउ। २। ईयामहे२। हाउवा। प्रियेधामण्त्स्त्रियच्चरे
२१रर २ १ २३११११
। २। प्रियेधामण्त्स्त्रियच्चरे२३४५ ॥ ३

४ ॥ गायत्रीसाम ॥ ऊ० ६,२,१०,१। चतुर्भ्यस्येभ्य: पृथक् ॥

१ र ५ र र —
तत्सवितुर्वरेणियोम्। भार्गोदिवस्यधीमाहीर।
२१रर २ १ — १
धियोयोनःप्र। चोऽ१२१ऽ२। हुम्। आ२। दायो।
२ १११
आ२३४५ ॥ ४

५ ॥ औशनसम् ॥ ऊ० १,१,१,५। गे० १,१,८ ॥

४र५४ १ १ १ र २
प्रेष्ठंवः। अता२३इथीम्। स्तोपेमित्रम्।
२ १ र १ २ २ १ २
इवमा२३याम्। अग्नाइरा२३था२३म्। नावा२३हा
१ ५ ५
३४३यि। दा२३४योऽ६हाइ ॥ ५

६, ७ ॥ शुद्धाशुद्धीये ॥ छ० ४,२,१,८ । गे० ८,२,७-८ ॥

एतोन्विन्द्रꣳस्तवामा । शुद्धꣳशुद्धेनसा२३म्ना । शुद्धै
रुक्थैर्वावृध्वा२३ꣳसाम् । शुद्धैरा२३शी३ । वा२न् ।
ममा३४औहोवा । तू२३४५ ॥ ६

एतोन्विन्द्रꣳस्तवा६मा । शुद्धꣳशुद्धे । न । साम्ना२ ।
शुद्धाइरू३क्था२यिः । वावा२र्ध्वा२३४ꣳसाम् । शुद्धै
रा२७शी । वाम्नामत्तु । इडा२३भा३४३ । ओ२३
४५इ । डा ॥ ७

८ ॥ राजनम् ॥ छ० ४,१,२,६ । आर० ४,२,१८ ॥

हुम् । ३ । हो । ३ । इꣳ । ३ । ओहा । २ ।
ओहा । औहोइ । २ । औहोइ । इन्द्रन्नरो । ने३
मधि । ताहवन्ताई । ३ । वयोवृहत् । ३ । विभाष्टये
विधर्मणे । ३ । यत्पारियाः । युनज । ताद्धियस्ताः

२ १ र १ २र १र
। ३ । सत्यमोजः । ३ । रजःसुवः । ३ । शूरोन्तृषा ।
र १ र, ३ ४र ५ २ १ र २ १र
ताश्रव । सश्वकामाइ । ३ । भद्रꣳसुधा । २ । भद्रꣳ
र १र १ र २र १र
सुधे । पमूर्जम् । इषमूर्जम् । २ । आगोमताइ ।
२ १र २र, ३ ४ ५ २ १ २ १ २
व्रजेभ । जातुवन्नाः । ३ । वृहद्यशः । ३ । दिविदधे३
१ २ १ २ २ १र र र र र र२३
हस् । २ । दिविदधे३ । हाउवा । वागीडासुवोबृहद्भा
१ १ १ १
२३४५: ॥ ८

८ ॥ रौहिणम् ॥ छ० ४,१,३,६ । आर० ४,२,२० ॥

२र १ २ १ २
हाउ । ३ । आईही । ३ । आइहिया । ३ ।
१ २ १ २ १ २ १
आसाउ । ३ । आयाम् । ३ । नामाः । ३ । किट् ।
१ र र र —१ र र र
२ । इन्द्रन्नरोनेमधिताहवा२न्ताई । यत्पार्यायुनजते
—१ र र र र —१ र र
धिया२स्ताः । शूरोन्तृपाताश्रवसश्च का२मायि । आगो
र र —१ १ १ र
मतिव्रजेभजातुवा२न्नाः । मना२३होई । प्राणा२३
१ १ र १ र
होइ । चचू२३होई । श्रोत्रा२३ꣳहोई । घोषा२३

होइ। व्रता२३ए्होइ। भूता२३ए्होइ। पाना२३ए
होइ। चित्ता२३ए्होइ। धीता२३ए्होई। सुवा२३
होई। ज्योता२३इ्होर। वा२३४। औहोवा।
ऊ२३४५॥ ६

१० ॥ हृद्वत् ॥ छ० ३,१,५,२। आर० १,१,२०॥

औहोइत्वामिद्धिहवामहा३ए। सातौवाजा। स्या
कारा२३४वाः। तुवा३४। औहोवा। हवाइयुवाई।
द्रासा३१त्। पतिन्ना२३४राः। त्वाङ्काष्ठा३४।
औहोवा। सु२अर्वा२३४। ताः। उहुवा३हा३।
वा। हस्॥ १०

११ ॥ रथन्तरम् ॥ छ० ३,१,५,१। आर० २,१,२१॥

आभित्वाशूरनोनुमोवा। आदुग्धाइवधेनवईशान
मस्यजगतः। सुवा२३र्दृशाम्। आइशानमा२३

४ ३ १ र र ५ ५
द्रा२ । तास्यू२३४पा । औवा६ । हाउवा ।
१
अस् ॥ ११

१२ ॥ पुरुषगतिः ॥ आ० १,८ । आर० २,२,३४ ॥

२र १रर २ २ १
हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् । ३ ।
१र२र१र र २ २र र
दानेनादानम् । ३ । हाउ । ३ । अहमस्मिप्रथमजा
१ २ ११११ २र १रर २
ऋता२३स्या२३४५ । हाउ । ३ । सेतूꣳस्तर । ३ ।
१ र २र १र २ १ र २र १र
दुस्त । रान् । अक्रोधेनक्रोधम् ।२। अक्रोधेनक्रोधम् ।
२र र र र र १ २ ११११
हाउ । ३ । पूर्वन्देवेभ्योअमृतस्यना२३मा२३४५ ।
२र १रर १ २ १
हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् । ३ ।
२१र २र २र २र र र २१
श्रद्धयाश्रद्धाम् । ३ । हाउ । ३ । योमाददातिसइदेव
२ ११११ २र १रर २
मा२३वा२३४५त् । हाउ । ३ । सेतूꣳस्तर । ३ ।
२ १ २ १र र २ २र
दुस्त । रान् । ३ । सत्येनानृतम् । ३ । हाउ । ३ ।
१ २ ११११ २र ५ ५
अहमन्नमन्नमदन्तमा२३औ२३४५ । हाउहाउहाउवा ।

२१ १र　२र १२१　१२
एषागतिः । ३ । एतदमृतम् । ३ । स्वर्गच्छ । ३ ।
१र २　१र र २र १र २ १　१११
ज्योतिर्गच्छ । ३ । सेतूꣳस्तीर्त्वाचतुरा२३४५ः ॥ १२

१३ ॥ महानाम्न्यः ॥ मूलमस्य छन्दआरण्यकोत्तरेभ्यः पृथक् ॥

१　१—　११र २　१　२र १
॥ ॐ३म् ॥ ए२ । विदामघवन्विदाः । गातुमनु
१ २　२ ५ १—
शꣳसिषः । दाद्दशा३१उवा२३ । ई३४डा । ए२ ।
१र १र र १　२र र १र —　१२
शिक्षाशचीनाम्पताइ । पूर्वीणाम्पुरु२ । वसा३१उवा
२ ५　२र १　—　१ २
२३ । ई३४डा । आभिष्टमभा२इ । ष्टिभिरा३१
२ ५　१ र　र　१
उवा२३ । ई३४डा । स्वर्णाꣳशूरः । हा३१उवा२३ ।
२ ५　१ २र　र　१ २　२ १र —
ई३४डा । मांचे । ततप्रचेतया । इन्द्रा । द्युम्नायना२
१　१　१ २　२ १र　१　१ २
इयाइ । इडा । इन्द्रा । द्युम्ना॰ । अथा । इन्द्रा ।
२ १र　१　१र र　र र र र र　२　१
द्युम्ना॰ । इडा । एवाहिशक्रोरायेवाजायवा१ज्री३
२　र १　१　५ ५　१
वाः । शविष्ठवज्रिन्ना३ । ञ्जासाइ । मꣳहिष्ठवज्रि

१ १ २ १ १११
न्ना२३हो । जासा३१उवा२३ । इटूड्डा२३४५ ।
१ २ २ १ — १ १ ११११
ग्राया । ह्रिपिबमा२त्सुवा । इडा२३४५ ॥—

१— २१र र र र १र र र र
ए२ । विदारायेसुवीरियाम् । भुवोवाजानाम्पति
— १ २ २ ५ १—
र्वशाए२ । अनुआ३१उवा२३ । ई३४डा । ए२ ।
१ २ १ १ र ऽ २
मण्हिष्ठवज्जिन्न्टञ्जसाइ । यःशविष्ठःशूरा२णा३१उवा
२ ५ १र र ऽ २
२३ । ई३४डा । योमण्हिष्ठोमघोर । ना३१उवा२३ ।
२ ५ २ १ र ऽ २
ई३४डा । अण्शुर्नशोचा२इ । हा३१उवा२३ ।
२ ५ १ २र र १ २ २१र
ई३४डा । चाइ । किवोअभिनोनया । ईन्द्रो । विदे
— १ १ १ २ २१र — १
तमू२स्तुहाइ । इडा । ईन्द्रो । विदेतमू२स्तुहाइ ।
१ १ २ २१र — १ १ १र र
ग्रथा । ईन्द्रो । विदेतमू२स्तुहाइ । इडा । ईशेहिशक्
र र २ २ १ २र१र २ ४ ५
स्तमूतयेहवा१मा२हाइ । जेतारमपरा३ । जाइताम् ।
१ १ १ २ १
सनःस्वर्षता२३होइ । हाइपा३१उवा२३ । इटूड्डा
११११ १ २ २ १ —१ १ ११११
२३४५ । क्रातूः । छन्दऋता२म्बृहात् । इडा१२३४५ ॥

१— १ २ ३ १ १ २ २ ३ २
ए२। इन्द्रस्यनस्वसातयाइ। हवामहेनेतारम

— १ २ २ ५ १— १
परा२। जितमा३१उवा२३। ई३४डा। ए२। सनः

२ १ १ — १ २
स्वर्षदतिद्विषाः। सानःस्वर्षदता२इ। द्विषया३१

२ ५ १२ — १ २
उवा२३। ई३४डा। पूर्वस्ययत्तया२। द्रिवया३१

२ ५ २ १ २ ३ २
उवा२३। ई३४डा। अध्ुशुर्मदायार। हा३१उवा२३।

२ ५ १ २ २ २ १ २ २ १
ई३४डा। सूनुआधेहिनोवसाउ। पूर्तीः। शविष्ठ

— १ १ १ २ २ १ — १
या२स्यताइ। इडा। पूर्त्तीः। शविष्ठा२स्यताइ।

१ १ २ २ १ — १ १ १ २
यया। पूर्त्तीः। शविष्ठा२स्यताइ। इडा। वशीहि

२ २ २ २ २ २ १ २ २
शक्रोनूनन्तन्नव्यऍसा१न्या२साइ। प्रभोजनस्यवा२।

३ ५ १ २ १ १ २
याहान्। समर्येषुब्रवा२१होइ। वाहा३१उवा२३।

१ १ १ १ १ १ २ १ २ १ २ — १ १
इट्इडा२३४५। शूरो। योगोषुगा२च्छताइ। इडा।

१ २ २ १ २ — १ १ १ १ १ १
साखा। सुशेवो२हयूः। इडा२३४५॥—

१ २ २ २ १ १ १ १ १ १ १ २
आइया। हियेवा१२४५। होइ। हो। याहा३१

२ ५ १ २ २ १ ११११
उवा२३ । ई३४डा । आइवा । हियग्ना२३४५इ ।
१ १ २र २ ५ १ २
होइ । हो । वाहा३१उवा२३ । ई३४डा । आइवा ।
२ १ ११११ १ १ २र
हिइन्द्रा२३४५ । होइ । हो । वाहा३१उवा२३ ।
२ ५ १ २ र१ऽऽऽऽ १ १
ई३४डा । आइवा । हिपूषा२३४५न् । होइ । हो ।
२र २ ५ १ २ २र१११
वाहा३१उवा२३ । ई३४डा । आइवा । हिदेवा२३
११ १ १ २र २ ५
४५: । होइ । हो । वाहा३१उवा२३ । ई३४डा ॥१३

१४ । महादिवाकीर्त्यम् । स्तो० २,८; भा० ५,२। आर० ६.१,८-१८।

२र १र १र ३र २
हाउ । ३ । आयुः । ३ । ज्योतिः । २ । ज्योता
५र र २ १र र ३ ११११ २रर
३४ । औहोवा । ए३ । वाग्ज्योती२३४५: ॥ एवा
र३ ५र र २र र ५र र
हियेवा२३४औहोवा । हा७ह७हा७ह७ह७३४औहोवा ।
२र१ २ १ २ १
( एवं त्रिः ) हियेवा । हियग्नाइ । हिइन्द्रा ।
२र१ २र१ ११११ २र र १ २
हिपूषान् । हिदेवा२३४५: ॥ वयोमनोवयःप्राणाः ।
२ १ २ २रर र र १ २ १
वयश्चक्षुर्वयःश्रोत्राम् । वयोघोषोवयोव्रातम् । वयो

२३भूताउ । वा३ । ई२३४५ ॥ वयोमना२३: । होइ ।
हौवाओ२३४वा । वय:प्राणा२३: । होइ । हौवा
ओ२३४वा । वयश्चक्षू२३: । होइ० । वय:श्रोत्रा२३म् ।
होइ० । वयोघोषा२३: । होइ० । वयोव्रता२३म् ।
होइ ० । वयोभूता२३म् । होइ । हौवाओ२३४५
वा६५६ । उ२३४५ ॥ ऊ२र्क् । हाउ । ३ । हो३
वाक् । ( एवन्ति: ) । धर्मोऽ२धर्म: । ३ ॥ धर्मवि
धर्म । ३ । सत्यङ्गाय । ३ । ऋतंवद । ३ । हएवं
व२म्वंव२म्वम् ।३॥ औहोहोवाहाई । २ । औहोहो
वाहा३१उवा२३ । भू२३४वात् । विभ्राड्बृहत्पिब
तुसोम्यम्म । औहोहोवाहोइ । औहोहोवाहोइ ।
औहोहोवाहा३१उ । वा२३ । जा२३४नात् । आयु
र्दधद्यज्ञपतावविह्रुतम् । औहोहोवाहोई । २ । औहो

१र र २ १ ५ १र १र र १र
होवाहा३१उ। वा२३। वा२३४र्धात्। वातजूतोयो
२१ २ १ र २र र १र र २र र
अभिरत्नतित्मना। औहोहोवाहोई।२। औहो
१र र २ ३ ५ २ १र
होवाहा३१उ। वा२३। का२३४रात्। प्रजाःपि
२ १र र २ २र र १र र २र र
पर्त्तिवद्धधाविराजति। औहोहोवाहोई।२। औहो
१र र २ — र १ र २र १र २ र
होवाहा३१उ। वा२।२। ए। अभाजौज्योतिरभा
३ १११११र २ १ २ १
जो२३४५त्॥ भूमिः।३। अन्तरिक्षम्।३। द्यौः।
२ १र र र २र १र १११
।२। द्या३४। औहोवा। ए३। भूताया२३४५॥
२ऽ २ १ २ १र ६र २
द्यौः।३। अन्तरिक्षम्।३। भूमिः।२। भूमा
१र र २ १र ३११११ २र
३४। औहोवा। ए३। आयुषे२३४५॥ हाउ।
१र २र २ २र र ३१
३। ज्योतिः।२। ज्योता३४। औहोवा। ई२
१११
३४५॥ १४

*( महादिवाकीर्त्य मिति दशानां शिरआदिसाम्नां समुदितानामेकं नाम। तथा चाम्नायते—"महादिवाकीर्त्यं सौर्यं वा दशानुगानं तस्य शिरः ग्रीवा च स्कन्धकीकसौ च पुरीषाणि च पक्षौ चात्मा चोरू च पुच्छश्चैतत्साम सुपर्ण मित्याचक्षते"-इति )*

१५,१६,१७ ॥ ज्येष्ठसामानि । ऊ०२,२,२,७ । आर०१,२,१६-१८

२र २र ३ ४र ५ २र १र
हाउ । ३ । आज्यदोहम् । ३ । मूर्धानन्दाई ।
२ १ २ ३ ४ ५ १र १र २ १ र
वा३अर । तिम्पृथिव्याः । वैश्वानराम् । ऋतआ ।
२र ३ ४ ५ २ १ २ १ २ ३ ४र
जातमग्नीम् । कविᳲसम्रा । जा३मति । थिञ्जना
५ २र १ २ १ २ ३ ४र ५ २र
नाम् । आसन्नःपा । त्रा३ञ्जन । यन्तदेवाः । हाउ ।
२र ३ ४र ५ २र ३ ४ २र
३ । आज्यदोहम् । २ । आज्यदो५हाउ । वा । ए ।
र १ १ २र र १ २ १ १ १ १
आज्यदोहम् । २ । ए । आज्यदोहा२३४५म् ॥ १५

२र र १ २ १ २ २र १र
हाउ । ३ । हुम्चिदोहम् । चिदोहम् ।२। मूर्धा
२र र १ २
नन्दाई । एषा ऋक् । हाउ । ३ । हुम्चिदोहम् ।
२ १ २ ५ २ १ १ १ १ १
चिदोहम् । चिदो३हाउ । वा३ । ई२३४५ ॥ १६

२र १ २ २र १र
हाउ । ३ । च्योहम् । ३ । मूर्धानन्दाई । एषा
२र १ २ ५ २
ऋक् । हाउ । ३ । च्योहम् । २ । च्यो३हाउ । वा३ ।
२ २ १
ए३ । ऋतम् ॥ १७

१८, १९, २० ॥ देवव्रतानि ॥ स्तो० २,९ । भार० ५,१,६–८ ॥

१ २ १ २ १ २
अधिप । ताइ । मिवप । ताइ । द्ववप ।
१ २ १ २ — —१
ताइ । स्व:पताइ । धनपतार्इ । नार्मा: ।
२ १ र २ १र र र २ १र २ १र २ १ २र१ २र १र
मनुग्नावृत्रहासूर्य्येणस्वराडाद्गेनमघवादक्षिणास्यप्रिया
२ १र र २र १ २र र २ १ र २ १र २ र १ २
तनूरात्त्राविशन्दाधार । वृषभस्त्वष्टात्त्रेणशचीपति
१र २१ २ १र २ १र र २र१ २
रन्नेनगय:पृथिव्यास्तृणिकोग्निनाविश्वम्भूतम । अथभ
र र १ र र २ १र २ र र १र र २ १र र
वोवायुनाविश्वा:प्रजाअभ्यपवथावषट्कारेणार्द्धभाक्सो
र २ र १र २र र १र र र २र र र १ २
मेनसोमपा:समित्यापरमेष्ठी । येदेवादेवा: । दिविपद: ।
१ र र २र र र र १र २र १ २ १र र २र र र
स्ततेभ्योवोदेवादेवेभ्योनम: । येदेवादेवा: । अन्तरि
१ २ १ र र १र र १र र र र १ २
क्षसद: । स्ततेभ्यो० । येदेवादेवा: । पृथिवीषद: ।
१ र १र र २ १ २ १ र १र र
स्तते० । येदे० । अप्सुपद: । स्तते० । येदे० ।
२ १ २ १ र १र र २र र १ २ १ र
दिक्षुपद: । स्तते० । येदे० । आशासद: । स्तते० ।
१ २ १र २ १ २र १ र २ १ २र १ र २ १ २ १
अवज्यामिवधन्वनोवितिमन्युन्नयामसिम्डतान्नइहचस्म

२ १ २ १ र २
भ्यम् । इडा२३भा । यदूदंविश्वंभूतम् । युयो३ ।
१ ४ ५
श्राउ । वा२३ । ना२३४माः ॥ १८

१ १ १ २ १ २ १
अधिप । ताई । मित्रप । ताइ । चत्रप । ताई ।
२१ २ — —१ २ १
स्वःपताइ । धनपता२इ । ना२माः । नमउत्ततिभ्य
२र र १र २१र२र १ २र र १ २१र २
श्चोत्तन्वानेभ्यश्चनमोनोपङ्गिभ्यश्चोपवीतिभ्यश्चनमोत्स्यद्भ्य
२१र२र १ २१ २ र १ २१२
श्चम । तिद्धानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमः
१ २ र १ २१ २ १र २र १ २
त्वरद्भ्यश्चत्सारिभ्यश्चनमःश्रि । तेभ्यश्चस्थायिभ्यश्च
१२ १ २ र १ २ १र२१र २ १र२१ २१र२
नमस्तिष्ठद्भ्यश्चोपतिष्ठ॰भ्यश्चनमोयतेचवियतेचनमःपद्येच-
१ २र ११ १र २१ २र १र२१ २र
विपयायच । अवज्यामिवधन्वनोवितेमन्युन्नयामसिम्ट
१र १ १ २ १ २ १ २ १ र
डतान्नइएअस्मभ्यम् । इडा२३भा । यदूदंविश्वंभूतम् ।
२ १ ४ ५
युयो३ । श्राउ । या२३ । ना२३४माः ॥ १९

१ २ १ २ १ २
अधिप । ताई । मित्रप । ताई । चत्रप ।
१ २१ २ — —१ १र
ताई । स्वःपताइ । धनपता२इ । ना२माः । नमो

र २ १ र २ र र १र २र र १र २ १ १र १

न्नायन्मोन्नमतयएकाद्यायचावमन्नादायचनमोनमः ।

२ १र २र १२र १ २ १र २ १ २ र १ २ १ १ र

रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायच

१ र २ १ १ १ २ र १ र २ १ २र र १र

पटरिणेचनमस्त्रियम्बकायचक । पर्हिनेचनमश्वाश्वाये

२ र र १र २ १ २ १र २ १र २ १

भ्यश्चप्रत्याश्वायेभ्यश्चनमः कृत्येभ्यश्चविरिम्फेभ्यश्चनमः

२ १ र २ १ र १ २ १र २ १ १र १ र २ १ २र

संवृतेचविवृतेच । अवज्यामिवधन्वनोवितिमन्युन्नयाम

१र २ १ २ १ २ १ २ १

सिस्रुडतान्नदुहचस्तभ्यम् । इडा२३भा । यद्वदंविश्व

र २ १ ३ ५

भूतम् । युयो३ । आउ । वा२३ । ना२३४माः ॥ २०

२१—२६ ॥ पुरुषव्रतानुगानम् ॥ था० ४, ३–७ ;

छ० २,२,३,५ । आर० ५,१,१३—१८ पट् ॥

"द्वे पुरुषव्रते ; पञ्चानुगानं चैकानुगानं च" ब्रा० ।

१ १ २ २ १ र र २ २

उहुवाहाउ । ३ । सहस्रशीर्षाःपुरू२३षाः । सह

र १ २ १ २ १ र २ १र २

स्राक्षःसहस्रा२३पात् । सभूमिꣳसर्वतोवा२३त्वा ।

१ २ १र १ २ १ २ २ १

अत्यतिष्ठद्दशाङ्गू२३लाम् । उहुवाहाउ । २ । उहु

र १ १ १ १ १ १

वा३हाउ । वा३ । इटइडा२३४५ ॥ २१

२ १ र ३ — २ १ र र र २
उहुवौहोवा२ । ३ । त्रिपादूर्ध्वउदैत्पुरु२३षः ।
१ र र र र १ १ २ १ र २ १ २
पादोस्येहाभवत्पू२३नाः । तथाविष्वङ्व्यक्रा२३मात् ।
र १ र २ २ १ र र — १ र
अशनानशनेअ२भी । उहुवौहोवा२ । २ । उहुवौ ।
१ ३ १ र र ३ ५ २ १ र
हो२ । वा२३४ । औहोवा । ई२३४डा । उहुवौ
र — २ १ र १ ३ १ र र
होवा२ । २ । उहुवौ । हो२ । वा२३४ । औहोवा ।
३ ५ २ १ र र — २ १ र १
सू२३४वाः । उहुवौहोवा२ । २ । उहुवौ । हो२ ।
३ १ र र ३ १ १ १ १
वा२३४ । औहोवा । ऊ२३४५ ॥ २२

१ र र — १ र र २ १ र
इयौहोवा२ । ३ । पुरुषएवेद१ँसा२३र्वम् । यद्भूतं
२ १ र २ १ र र र र २ २ १ र
यच्चभावा२३याम् । पादोस्यसर्वाभूता२३नी । त्रिपा-
र २ १ ३ १ र र र — १ र र —
दस्यामृतन्दा२३इयौ । इयौहोवा२ । इयौहोवा२ ।
१ र १ ३ १ र र ३ ५
इयौ । होर । वा२३४ । औहोवा । इ२३४डा ।
१ र ३ ५ १ र ३ १ १ १ १
इयौ । ज्यो२३४ती: । इयौ । ई२३४५ ॥ २३
१ र १ र र २ १ २ २ र
हाउ । ३ । तावानस्य । महा२३इमा२ । हाउ ।

१ र र र २ १र २ २र १र
३। ततोज्यायाꣳश्चपूरु२३षा१ः। हाउ। ३। उता
र २ २र १ र र २ १र
मृतत्वस्येशा२३ना३ः। हाउ। ३। यदन्नेनातिरोहा
२ २ऽ २ १ १११
२३ती२। हाउ। ३। वा३। इट्इडा२३४५॥ २४
२ऽ १ र २ १र २र २ऽ
हाउ३वा। ततोविराड़जायत। हाउ३वा।
२ १र२र १ २ १र २ २ऽ १२र १र २
विराजोअधिपूरुषः। हाउ३वा। सजातोअत्यरिच्यत।
२ऽ १र र २ १ र २ १ २ऽ २ १ १
हाउ३वा। पश्चाद्भूमिमथोपुरः। हाउ३वा३। ई२३
१ १
४५॥ २५
२र १ २ १ २ १ २ १ २
हाउ। ३। अस्मीनस्मिन्। ३। नृत्माइन्द्रस्याम्
१ २ २र १ २
। ३। निधाइमाहे। ३। कयानश्चित्रा३आभू१वा२त्।
२र र र १ २ २ र १ २
ऊतीसदावृ३धाःसा१खा२। कयाशचिष्ठा३यावा१र्ता
२र १ २ १ २ १ २ १ २
२३। हाउ। ३। अस्मीनस्मिन्। ३। नृत्माइन्द्रस्याम्।
१ २ १ १ २
३। निधाइमाहे। २। निधा२३इ। मा२। हा२३४
४र र १ १र २ १११
औहोवा। सुवर्ज्योती२३४५ः॥ २६

२७ । तवश्यावीयम् ॥ चतुर्गानग्रन्थेभ्यः पृथगेव ॥

१   १११२   १ र   र   २ १ र
ॐहा़२३४५ । ॐभूः । ॐभूमिर्द्दिवमन्तरिक्षम् ।
१   र र   र र १   १ र र
ॐभुवः । ॐऋचोयजूंषिसामानि । ॐभार्गोदेवस्य
र   १११२   १   १ र र र र
धीमाही२३४५ । ॐस्वः । ॐप्राणोपानोव्यानः
र २र १   १ २१र र   ११११
समानउदानः । ॐधियोयोनःप्रचो२३४५ । ॐमहः ।

ॐजनः । ॐतपः । ॐसत्यम् । ॐपुरुषाः । ॐ
र र २१   १ ११११   —
परोरजोयमृतोम् । ॐहा़२३४५ । हुम् । आर ।
१   २११११   १ र   र
दायो । आ२३४५ । ॐभूमिरन्तरिक्षंद्यौः । ॐ
र   र   र
तत्सवितुर्वरेण्यियोम् । ॐऊऽ२र्का । हाउ३ । होऽ३
२   १२१र र २र१   १   र
वाक् । ॐवह्निर्भोयजोयमृतोम् । ॐऊऽ२र्का । हाउ३ ।
१   १ र र र   र र   र २र१
होऽ३वाक् । ३ । ॐप्राणोपानोव्यानःसमानउदानः ।
र र   २११११   १   र
धियोयोनःप्रचो२३४५ । ॐऊऽ२र्का । हाउ३ । होऽ३
२   १ र १   १ २ १ २
वाक् । ३ । धर्मोऽ२धर्मः । ३ । धर्मविधर्म । ३ ।

२ १ र २
सत्यज्ञाय । ३ । ऋतंवद । ३ । हउवंव२ वंव२
१
वम् ।३ ॥ २७

२८ ॥ आदित्यव्रतम् ॥ स्तो० ३,१ । आर० ६,१,१८ ॥

१ र २र१र र२ १ र र २र
सन्त्वाभूतान्यैरयन् । होई । सन्त्वाभव्यान्यैरयन् ।
१ र २ १र२ १ र २
होई । सन्त्वाभविष्यदैरयत् । होइ । सन्त्वाभुवन
र १ र २र१र२ १
मैरयत् । होई । सन्त्वाभूतमैरयत् । होई ॥ २८

२९ ॥ आदित्यव्रतं द्वितीयानुगानम् ॥ स्तो० ५,३-५ । आर० १,२,१॥

१ —१ —१ —
॥ ॐ ॥ उवी२उवि । उविहो२उवि । ३ । इति२
र —१ —१ —
इति । इतिहो२इति । ३ । असी२असि । असिहो२
१ र२र १ २ २र —१
असि । ३ । अहस्चोदिवंपृथिवीम् । असी२असि ।
—१ र २१रर २रर ऽ
असिहो२असि । ३ । पतिर । स्वपामोषधीना२म् ।
१ २ ३ २ ५ १ १र१र२र
ओई । पताइरा२३४सी । ३ । चाइ । चन्द्वाना
१ २र१रर १ र२रर१रर २ १ १
मुदगादनीकम् । वाइस्खेपान्देवानाꣳसमिदजस्तं

ज्योतिराततार्म् । होई । ३ । आयुर्यन् । ३ ।
अवः । ३ । चक्षुर्मित्रस्यवरुणस्याग्नेः । सुवःसऽ
सर्पसऽसार्पा । ३ । जनावनऽसुवा२ःसुवः । जनार
वनार्म् । सुवा१ःसुवः । ३ । आप्राद्यावापृथिवी
आन्तरी२३क्षा३म् । स्वपिमस्पीऐही । ३ । अस्तो
पतस्वभानवाऐही । विमानविठयामताऐही । ग्रावा
गोवर्हिपिप्रियाऐही । इन्द्रस्यरऽहियम्बृहादेही । ३ ।
इन्द्रा२ । स्यारा२ । हिया२म् । बृहदिन्द्रस्यरऽहिय
म्बृहादेही ।३। सूर्यआत्मानगतस्थुषा२३श्चा३ । अन्त
श्चरतिरोचनाऐही । ३ । अस्यप्राणादपानताऐही । ३ ।
व्यख्यन्महिषोदिवामेही । ३ । मोऽएतिमोएति । ३ ।
प्रोऽएति । २ । मो२३ । एता३४ । औहोवा ।
ए३ । देवादिवाज्योतो२३४५ः ॥ २८

